# संस्कृत-वार्ता:

**दिनाङ्क:** 14-12-**2020**

**प्रात:** **-** 06: 55

**मुख्य-वार्ता:**

- प्रधानमन्त्री नरेन्द्र मोदी श्वः कच्छ क्षेत्रस्य धोर्डोस्थानस्य यात्रां विधास्यति।
- चाबहार-जलपोतस्थानविषयकं सम्मेलनं अद्य भविष्यति। अस्यां त्रिपक्षीयवार्तायां भारत-ईरान-उज्बेकिस्तान इति देशा: भागं ग्रहीष्यन्ति।
- कोविड नाइन्टीन् इति वैश्विक संक्रमणं विरुध्य भारतीय: संघर्ष: प्रवर्धतेतराम्। कोरोना संक्रमण-प्रतिरोधी वीराणां प्रयासेन प्रत्यवाप्तिमिति: नव-त्रीणि दशमलवोत्तर चतुर्नवति प्रतिशतं यावत् विवर्धिता।
- भारतीय रिजर्व बैंक द्वारा आर.टी.जी.एस्. धनप्रेषण सौविध्यं दिवानिशं प्रदास्यते।
- **अपि च**
- केन्द्रशासिते जम्मूकश्मीरे समायोज्यमाणस्य जनपद् विकास परिषद: निर्वाचनानां षष्ठं चाक्रिकं मतदानम् ह्यः शान्तिपूर्ण रीत्या सम्पन्न्तांगतम्।

**कोविड ओपनिंग**

कोरोणामहामार्या: विरुद्धं देश: ऐक्यभावनया युद्ध्यते। भवन्तोऽपि अस्माभि: सह सुरक्षाया: उपायत्रयस्य सङ्कल्पं स्वीकुर्वन्तु-

- **मुखावरकं सन्धारयन्तु** –
- **सामाजिकदौर्यं परिपालयन्तु,**
- **पाणिपादं च यथासमयं प्रक्षालयन्तु।**

वार्ताः विस्तरेण।

------

**प्रधानमन्त्री कच्छ**

प्रधानमन्त्री नरेन्द्र मोदी श्वः कच्छ क्षेत्रस्य धोर्डोस्थानस्य यात्रां विधास्यति। प्रधानमन्त्री नैकेषां विकासकार्यक्रमाणां परियोजनानां च आधारशिलां संस्थापयिष्यति। एतासु परियोजनासु नवीकरणीयोर्जा-उद्यानं स्वचालित-दुग्ध संयत्रं प्रभृतय; परियोजनाः सन्ति।

गुजरातराज्यं समुद्रीय-जलस्य पातुं योग्यं जले परिवर्तनक्रमे महान्ति कार्याणि करोति।

-----

**चाबहार**

चाबहार-जलपोतस्थानविषयकं सम्मेलनं अद्य भविष्यति। अस्यां त्रिपक्षीयवार्तायां भारत-ईरान-उज्बेकिस्तान इति देशा: भागं ग्रहीष्यन्ति।

अनया वार्तया व्यापारिण: व्यापरसमुदायाश्च लाभान्विता: भविष्यन्ति। उज्बेकिस्तान देशमतिरिच्य केन्द्रीय-एशिया देशा: अपि अस्यां स्वरुचिं प्रदर्शितवन्त:। विदेशमन्त्रिणा निगदितं यत् भारतं अन्यै: राष्ट्रै: साकं पारस्परिकं सुसम्बन्धं प्रदर्शयति ।

-----

**उपराष्ट्रपति**

उपराष्ट्रपतिना एम्. वेंकैय्या नायडुना प्रत्यपादि यत् आतंकवादं लोकतन्त्राय हानिकरं विद्यते। विश्व-समुदायेन ऐक्यभावनापुरस्सरं आतंकवाद-पोषक-राष्ट्राणां विरुध्य पदक्षेप: समुत्थापनीय:। ह्यः अस्यशताब्दस्य प्रथमे वर्षे दुरापादितं आतंकवादिनां संसद्-भवन-आक्रमण-कुकृत्यम् स्मारयन् एकस्मिन् फेसबुक-आलेखे उपराष्ट्रपतिः अलिखत् कुकृत्यमिदं कदापि नैव विस्मर्तुं शक्यते। राष्ट्ररक्षायै सर्वोच्चबलिदानसमर्पणकर्तार: अस्माभि: सर्वदैव संस्मरिष्यन्ते इति।

-----

**नेशनल कोविड अपडे**

कोविड नाइन्टीन् इति वैश्विक संक्रमणं विरुध्य भारतीय: संघर्ष: प्रवर्धतेतराम्। भारते अनारतं प्रत्यवाप्तिमितौ परिष्कारो जाजायते। भारते कोरोना संक्रमण-प्रतिरोधी वीराणां प्रयासेन प्रत्यवाप्तिमिति: नव-त्रीणि दशमलवोत्तर चतुर्नवति प्रतिशतं यावत् विवर्धिता। स्वास्थ्यमन्त्रालयेणोक्तं यत् विगते अहोरात्रे त्रयस्त्रिंशत् सहस्राधिक जना: स्वस्थीभूता:। सममेव आहत्य सप्तपञ्चाशत् सहस्रोत्तर त्रिनवति लक्षाधिका: जना: स्वस्थीभूता:। चतु:पञ्चाशदधिक द्वि शताधिक त्रिंशत् सहस्रं नूतनप्रकरणानि पञ्जीकृतानि।

------

**आर.बी.आई. - आर.जी.एस.**

भारतीय रिजर्व बैंक द्वारा आर.टी.जी.एस्. धनप्रेषण सौविध्यं दिवानिशं प्रदास्यते। एकस्मिन् ट्वीटालेखे भारतीय रिजर्व बैंक अध्यक्षः शक्तिकान्तदासः इदमघोषयत् यत् अधुना आर.टी.जी.एस्. धनप्रेषण सौविध्यस्य लाभः दिवानिशं सर्वदा उपलब्धं भविष्यति। तेनोक्तं यत् भारतं डिजिटल् माध्यमानां द्वारा धनप्रेषणं स्वीकरणं च वर्धापयितुं प्रयतते।

-----

**केरलास्थानीय निकाय निर्वाचनम्**

केरलायामद्य स्थानीय-निकाय-निर्वाचनानां अन्तिम-चरणं समायोज्यते। अस्माकं वार्ताहरेण संसूचितं यत् मतदानं प्रातः सप्तवादने प्रारभते। कन्नूर-प्रभृतीषु चर्तुर्षु जिलासु अद्य मतदानं भविष्यति।

------

**कृषका:-तोमरः च**

उत्तराखण्डस्य कृषकाणाम् एकं दलं ह्यः कृषिमन्त्रिणा नरेन्द्रसिंह तोमरेण सह मेलनम् अकरोत्। एतैः कृषकैः नवीन-कृषि-अधिनियमानां समर्थनं कृतम्। कृषिमन्त्रिणा कृषकेभ्यः धन्यवादाः ज्ञापिताः।

----

**डी.डी.सी. लेक्शन्**

ऐदं प्राथम्येन केन्द्रशासिते जम्मूकश्मीरे समायोज्यमाणस्य जनपद् विकास परिषद: निर्वाचनानां षष्ठं चाक्रिकं मतदानम् ह्यः शान्तिपूर्ण रीत्या सम्पन्न्तांगतम्। अस्मिन् षष्ठमे चक्रे एकत्रिंशत् आसनेषु मतदानम् अनुष्ठितम् अस्ति। यस्मिन् पञ्चचत्वारिंशदधिक द्विशतं प्रत्याशिनां भाग्यनिर्णयो निर्वाचनपेटिकायाम् समाविष्टोऽस्ति। येषु शतं महिला-प्रत्याशिन्यो वर्तन्ते। भीषण-शैत्य-वातावरणेऽपि मतदातृभि:

स्वीयमताधिकार: प्रयुक्त:। अस्मिन् प्रकरणे प्रतिशतं सप्त नव दशमलवोत्तर द्वि-चत्वारिंशत् मितं निर्वाचनम् अंकितम्। अस्मिन् चरणे प्राय: सार्धसप्तलक्ष मतदातार: मतदानाय शक्ता: अवर्तन्त इदं निर्वाचनं अष्टचरणेषु सम्पत्स्यते। परिणामश्च अस्य मासस्य द्वाविंशे दिनांके उद्घोषयिष्यते इति।

---

**जावेड़कर-बीजेपी-इलेक्शन**

वरिष्ठो भाजपा नेता केन्द्रीय सूचना प्रसारण मन्त्री च प्रकाश-जावड़ेकर: प्रत्यपादयत् यत् अचिरमेव विभिन्नेषु राज्येषु समधिगता: निर्वाचन-परिणामा: संसूचयन्ति यत् प्रधानमन्त्रिणो नरेन्द्रमोदिनो नेतृत्वे अपि तस्य जनकल्याणनीतिषु जनसामान्यं विश्वसिति इति। नवदिल्ल्यां वार्ताहर-सम्मेलनं सम्बोधयता श्रीप्रकाश-जावडेकरेण प्रत्यपादि यत्-भारतीय जनता-पार्टी इति दलेन बोडोलैण्ड-क्षेत्रीय-परिषद: निर्वाचने अतीव उत्कृष्ट-प्रदर्शनं व्यदधात्। तेन प्रोक्तं यत् दलेन वोडोलैण्ड क्षेत्रीय निर्वाचनाय मुख्य-कार्यकारी-सदस्यत्वेन उद्घोषित:।

-----

**।। इति वार्ता: ।।**